॥ २ ॥ ता अस्मिन् गृहे संप्राप्नुवंतु या मुक्तात्मनां संतुष्टयश्च भक्तयश्च विशिष्टदातयश्च प्रतिकृतयश्च ॥ उच्चैः पुनरेतस्मिन् गृहे संप्राप्नोतु पुण्यं च राज्यं च लाभश्च श्रीः च शुभं च दीर्घं प्रभुत्वं च अनया दीन्या या अहुर्मज्दीया जरथुश्त्रिया ॥

॥ ३ ॥ अनश्वरः पुनः एतस्मात् गृहात् गोसंचयो भूयात् (किल संचयः चतुष्पदानां मा विनश्यात्)। अनश्वरं च पुण्यम्। अनश्वरा च नरस्य मुक्तात्मनः शक्तिः। अनश्वरश्च अहुरमज्दीयो[1] न्यायः ॥

॥ ४ ॥ आयांतु अत्र मुक्तात्मनां उत्तमाः साधका गुरुतरा वृद्धयः। लक्ष्मीः आरोग्येण समन्विता पृथ्वीपृथुतरा[1] च नदीदीर्घा सूर्योच्चया[158] ॥ स्थितिर्भूयात् उत्तमानाम् (ये उत्तमा उत्तमतां कुर्वंति तेषां पुण्यप्रसादः एवं उपरिसंप्राप्नोतु यथा सर्ववारं उत्तमतायाः स्तुतिं कर्तुं योग्यं भवति) ॥ अस्थितिर्भूयात् अधमानाम् (ये अधमा अधमतां कुर्वंति तेषां निग्रहा विघाताः बलिष्ठाः एवं उपरि संप्राप्नोतु [संप्राप्नुवंतु] यथा सर्ववारं निकृष्टतया निंदां कर्तुं योग्या भवंति) ॥ प्रकृष्टं विकाशो भूयात् शुद्धीनां च श्रीणां च ॥

॥ ५ ॥ अपनेयात् अस्मिन् गृहे श्रोशः अश्रुस्तिम्[1][159] (किल अदृश्यमूर्तिः श्रोशः इति आदेशलक्षणो ईअज्दः संप्राप्नोतु देवीं अश्रुस्तिं अनादेशचिन्हां निहन्यात्) संप्रतिपत्तिः[2] असंप्रतिपत्तिम् (किल पुरुषसंप्रतिपत्तिशीलो हंजमनी[3][160] एवं भूयात् अंतरस्मिन् गृहे यथा अदृश्यरूपिणी संप्रतिपत्तिः अंतरस्मिन् गृहे अभ्यागता भूयात् देवीं असंप्रतिपत्तिं निहन्यात्)। दक्षिणा अदक्षिणाम् (किल पुरुषो दक्षिणाशीलः सत्यः पात्रपरीक्षं दाता एवं भूयात् अंतरस्मिन् गृहे यथा अदृश्यरूपिणी दक्षिणा अंतरस्मिन् गृहे अभ्यागता भूयात् देवीं कृपणताचिन्हां निहन्यात्)। संपूर्णमानसता हीनमानसताम् (किल पुरुषः आदेशमध्ये संपूर्णमनां[4] एवं भूयात् अंतरस्मिन् गृहे यथा अदृश्यरूपिणी संपूर्णमानसता अंतरस्मिन् गृहे अभ्यागता भूयात् देवीं हीनमानसतां निहन्यात्)। सत्योक्तावाक् मिथ्योक्तां वाचम् (किल पुरुषः सत्यवाक् एवं भूयात् अंतरस्मिन् गृहे यथा अदृश्यरूपिणी सत्यवाक् अंतरस्मिन् गृहे अभ्यागता भूयात् देवीं असत्यवाचं निहन्यात्) श्रियः द्रुजिम्[161] (किल अदृश्यमूर्तिश्रियः इति पुण्यं संप्राप्नोतु देवीं अमार्गलक्षणां निहन्यात्) ॥

॥ ६ ॥ यथा अत्र अमिशास्पितानां श्रोशस्य भक्ति (नवा नवा किल श्रोशस्य) संप्राप्नोतु (सर्वेषां पुण्यकार्याणि संपूर्ण शक्ता भवंति[1] कर्तुम्) उत्तमानां इजिस्नीं च नमस्कृतिं च (नराकृतीनां इअज्दानाम्) उत्तमानां इजिस्नीं च नमस्कृतिं च (स्त्रीआकृतीनां इअज्दानाम्) उत्तमां आहुतिं शुभां आहुतिं सहाय्यआहुतिं च ॥ ताः[162] दीर्घं स्त्रीयाः दधतु[2] ॥

---

॥ ३ ॥ १. $K_1$, $H_1$, $K_3$ अहुरमज्दईओ.

॥ ४ ॥ १. $K_3$ पृथ्वीपृथुलतरा.

॥ ५ ॥ १. $K_3$ अश्रुस्तीयम्. २. Corrected from $K_1$, $K_3$, $H_1$, $EMU_3$, $EMU_1$ संप्रपत्ति. ३. $H_1$, $K_1$, $K_3$ हंयमनि. ४. $H_1$, $K_1$, $EMU_3$, $EMU_1$ आदेशमध्येनःसंपूर्णमन्.

॥ ६ ॥ १. Is it भवंती fem. nom. sg. ? २. $K_3$ omits ताःदीर्घं &c.

॥ ७ ॥ मा कदाचित् इदं गेहं शुभान्विता श्रीः विमुच्यात् (किल गृहस्वामी शुभश्रीमान् कदाचित् अस्मिन् गृहे मा विनश्यात् )। मा शुभान्विता लक्ष्मीः (किल शुभान्विता सदाचारोपार्जिता लक्ष्मीः कदाचित् अस्मिन् गृहे मा विनश्यात्) शुभान्वितः सुशीलपुत्रः (किल द्वीपमंडनो हंजमनी पुत्रः कदाचित् अस्मिन् गृहे मा विनश्यात्) ॥ शुभानि निवेदयामि उपरि लक्ष्म्या उत्तमायाः। दीर्घं कालं संमिश्रयामः (किल इहलोके शुभां समृद्धिं परिकल्पयामः परलोके च लक्ष्मीमूर्त्या[163] सह उत्तमया दीर्घकालं संमिश्रा भवामः) ॥ [ अशेम् वोहू ३ ]

---

## ॥ आशीर्वाद[:] राज्ञां ॥

॥ ८ ॥ अहुर्मज्दस्य शुद्धिमतः श्रीमतः आशीर्वादयामि राज्ञे देशपतये[1]। उत्कृष्टं उत्साहम्। उत्कृष्टं विजयम्। उत्कृष्टं राज्यम्। राज्यस्य च प्रतिकारिणीं स्थितिं च। दीर्घं स्वामित्वं राज्यस्य। दीर्घं जीवितं जीवस्य। रूपश्रीप्रवृत्तिं तनोः।

॥ ९ ॥ उत्साहिनं सुघटितं शुभोदितं विजयं होर्मिज्ददत्तम् (वहिरामं ईअज्दम्)। अशुभटालनां च उपरिप्रवृत्त्या। संपूर्णप्रहरकं[164] कष्टकारिणाम्[1]। प्रतिघातं दुष्टमनसां। एकहेलयाटालनां प्रतिद्वंद्विनां अमित्राणां पीडाकराणाम् ॥

॥ १० ॥ आशीर्वादयामि अशुभटालनायै[1]। टालको युद्धेन भूयात् समग्रं अमित्रगणं पीडाकरं समग्रं दुष्टगणं पीडाकरम्। असदाचारिमनसं असदाचारिवचसं असदाचारिकर्माणम् ॥

॥ ११ ॥ टालको भूयात् सदाचारिमनसा सदाचारिवचसा सदाचारिकर्मणा ॥ निहंता भूयात् समस्तान् दुष्टमानसान् समस्तान् देउइस्नान्[165] ॥ योग्यो भूयात् उत्तमस्य प्रसादस्य उत्तमायाश्च श्रुतेः[1] आत्मनश्च दीर्घायाः सुस्वामितायाः ॥

॥ १२ ॥ आशीर्वादयामि दीर्घं जीवितं शुभं जीवितम्। सहायतायै नराणां मुक्तात्मनां नास्तिकतायै[166] दुष्कर्मकारिणाम्। अतःपरं भुवनं मुक्तात्मनां सदोद्योतं समस्तशुभम् ॥ एवं संप्राप्नोतु यथा आशीर्वादयामि ॥

[167]सुमतानां सूक्तानां सुकृतानां इहलोकदातेश्च परलोकदातेश्च (किल इहलोकीयं शुभं तेभ्यः परलोकीयं च तैरेव भवति) विहितानां[1] च (यावत् इदानीं) विधेयानां च (अस्माद् ऊर्ध्वम्) भवामि अधिकं गृहीता[2] नरस्य नरे संपादयिता (पुण्यं यत् सदाचारि-मार्गेण) यथा[3] उत्तमो ना भवामि[4] (किल तच्च[5] एवं यथा अतिउत्तमं स्वकीयं करोमि)। (कोऽर्थः सुमतानां सूक्तानां सुकृतानां च यावत् इदानीं विहितानां[6] अस्माद्

---

॥ ८ ॥ १. $H_1$ राज्ञदेशपतये; FBV राज्ञोदेशपतेः; $K_1$ राज्ञोदेशपतयेः; $EMU_3$ राज्ञोदेशपतये.

॥ ९ ॥ १. Corrected from $H_1$, $K_1$ कष्टकारिणं.

॥ १० ॥ १. अशुभटालनया.

॥ ११ ॥ १. FBV स्तुतेः.

॥ १२ ॥ १. $H_1$, $K_1$, $EMU_1$, $EMU_3$, $K_3$ विधातानां; FBV विधितानां. २. $K_3$ FBV ग्रहीतारः. ३-४. Omitted in all except Sp. ५. $K_1$, $EMU_1$, $EMU_3$ तभ्र (?) [ तत्र ]. ६. $H_1$, $K_1$

ऊर्ध्वं विधेयानां च यत् इहलोकीयं च शुभं तेषां परलोकीयं च यत् शुभं तेषां तदहं गृह्णामि ) ॥

(पश्चात् अहुनवरोच्चारं कृत्वा धातुना चत्वारो दिशः हन्यँते। इति हन्यते इति हेतोर्यत् यत्तः चर्तुःष्वपि दिग्विभागेषु अहुर्मज्दीयोऽभिलाषं प्रचरति तथा रात्रौ अभ्यार्धं यत् किंचित् भूमौ निपतति तेन तन्वलयद्भयं[168] पापस्यं समुद्भवति तद् विलीयँति। पश्चात् अशेम् वोहू उच्चारं कृत्वा पुण्येन चत्वारो दिशः हन्यंते। इति हेतोर्यत् चर्तुःष्वपि दिग्विभागेषुं पुण्यं प्रचारयति ) ॥

॥ १२ ॥ [ अहुनवर २. इजिश्निं च नमस्कृतिं च इत्यादि पूर्वोक्तवत् ] ॥

---

## ॥ आफ्रंगानअर्दाफ्रउअसअविस्ताऽर्थः[169] ॥*

[ अहुनवर ८. अशेम् वोहू ३. प्रब्रवीमिइत्यादि गाह इत्यादि पूर्वोक्तवत्. ]

॥ ४ ॥ मुक्तात्मनां उत्तमानां साधकानां गुरुतराणां वृद्धीः आराधये।

या गृहेषु समायांति हमस्पथमइदएं[170] उपरि गुरुम् ( किल हमस्पथमइदएं नाम पुण्यगुरुं समयें उपरि याः गृहेषु समायांति )। अतस्तत्र विचरंति उपरि दशरात्रम्। ( अभ्यागततया इह संति तान् दशदिवसान् सर्वेषु च फ्रउअर्दिनरोजेषु[171] रोजगारेषु[172] च स्वकीये [षु] अन्यथा पुनर्यदि निमंत्रयंति ता आयांति)। तत् एतावत् यतो विज्ञातुं हेतोः।

कोऽस्मान् स्तुयात् क आराधयति कः स्वीकुर्यात् कः प्रकाशयेत् कः प्रतिकुर्यात् गोमता हस्तेन वस्त्रवता ( किल गोवस्त्रदानेन ) पुण्ययोग्यतायै प्रणामेन (किल यावत् महत्प्रसादयोग्यो भवति केनापि दानेन )। कोऽस्माकं इह नाम गृह्णीयात् (किल अंतर् इजिश्नौ नामग्रहणं कः कुर्यात्) । को युष्माकं आत्मनः आराधयेत् ( किल येन स्वीयो आत्मा आराधितः तेन वयं आराधिता भवामः )। कोऽस्मभ्यं तत् दानं दद्यात् यद् अस्य भवति आहारो अनश्वरः सदा च सदा प्रवृत्तौ च ॥

अथ यो नरः ताः प्रकृष्टं आराधयति गोमता हस्तेन वस्त्रवता ( किल गोवस्त्रदानेन )। पुण्ययोग्यतायै प्रणामेन ( किल यावत् महत्प्रसादयोग्यो भवति केनापि दानेन ) । तस्मै आशीर्वादयंति संतुष्टाः अद्विष्टाः अपीडिताः बलिष्ठाः मुक्तात्मनां वृद्धयः।

---

विधीतानां. ७. $K_1$, $EMU_2$ हन्यते इति हन्यते इति हेतो यत् चतुःष्वपि &c. FBV हन्यात्. ८. $K_1$ रभ्यांधं (?). ९. $EMU_3$ पापश्च; $EMU_1$ द्भये पापश्च. १०. $H_1$ विलीर्मयति (?); $K_1$ तद्भवलीर्मति (?) $EMU_1$, $EMU_3$ तद्भविलीर्मयति. ११. $EMU_3$, $EMU_1$ दिग्भागेषु. १२. $H_1$, $EMU_3$, प्रचरयति; $K_1$ प्रचरति.

---

* Thus $H_1$, $EMU_1$, $EMU_3$. But $K_1$ आशीर्वादस्थ[°स्य] प्रवर्दिआनस्थ[°स्य] अविस्तार्थः [ *i. e.* °दस्य °नस्य अ° ].

॥४॥ १. Corrected of साधुकानां in all. २. $K_4$ समं. ३. $K_4$ प्रचरंति. ४. $K_4$ ततो. ५. $EMU_3$ स्तुत (?). ६. $EMU_3$, $EMU_1$ पुण्याय योग्यतायै. ७. Corrected from $H_1$, $K_3$, $K_1$, $K_4$, $EMU_3$ गृह्यात्. ८. Corrected from $H_1$, $EMU_3$, $K_1$, $K_3$ नामग्रहं. ९. $EMU_1$ किंमात्मनः; $K_1$ मात्मनः; $K_4$ मात्मना. १०. $H_1$, $EMU_3$, $K_1$ स्वीआत्मन; $EMU_1$ स्वी; $K_4$ स्वीआत्मानः $K_3$ स्वीयआत्मनः. ११. $K_4$ युष्मभ्यं. १२. All गोमतान except $K_3$. १३. Corrected from $H_1$, $K_1$, $K_3$, $EMU_1$, $EMU_3$, $K_4$ अधिष्टाः.

भूयात् अस्मिन् गृहे गवां च संचयः वीराणां च। भूयात् तेजस्वी च अश्वः चमत्कारी च रथः। भूयात् नरः स्तुतिकरो हंजमनी (किल य उत्तमां [उत्तमान्] स्तौति हंजमनं च जानाति कर्तुम्)। योऽस्मान् नित्यं प्रकृष्टं आराधयति गोमता हस्तेन वस्त्रवता (किल गोवस्त्रदानेन) पुण्ययोग्यतायै प्रणामेन (किल यावत् महत्प्रसादयोग्यो भवति केनापि दानेन)॥

मुक्तात्मनां वृद्धिमतां बलिष्ठानां अधिकशक्तीनां बलिष्ठानां च विजयतां पूर्वन्यायवतां वृद्धिमतां नवान्वयनिकटानां च वृद्धिमतां वृद्धयः संतुष्टा आयांतु अस्मिन् गृहे संतुष्टाः प्रचरंतु अस्मिन् गृहे संतुष्टा आशीर्वादयंतु अस्मिन् गृहे उत्तमां लक्ष्मीं पालनापरां संतुष्टाः प्रयांतु गृहात् (किल उत्तमां लक्ष्मीमूर्ति उपरि सानंदाः क्रीडंतु[१४])। स्तुतिं च ख्यातिं च ब्रुवंतु स्रष्टुः अहुरमज्दस्य पुरतो अमिशास्पिंतानाम्॥ मा किंचित् क्रंदंत्यः प्रयांतु अस्मात् गृहात् अस्माकं च मज्दइअस्नानाम्॥ [अशेम् वोहू ३]

[आशीर्वादो राज्ञां पूर्वोक्तवत्]

---

## ॥ गहंबार-आफ्रंगानअविस्ताऽर्थः[173] ॥

॥ १ ॥ २ ॥ [अहुनवर ४ अशेम् वोहू ३ प्रब्रवीमि इति पूर्वोक्तवत्]

॥ ३ ॥ ददतु ते मज्दईअस्नाः तेभ्यः गुरुतायै[174] आहाराय च यः [आहारः] मइदिओइ-जरमसमयीयः पशुवार्षिकीयं[१] चास्ति (?) प्रकृष्टं विपक्वं दुग्धपाकम्। यदि तत् प्राप्तं अस्ति॥

॥ ४ ॥ नो वा तत् प्राप्तं अस्ति। सुवस्तु[175] किंचित् अथ ते ददतु[१]॥ तत् तस्मै भोजयेत्। आदेशवर्तिने[२] (गुरुमुखेन गुरुविद्या-स्वामिने[३]) ज्ञानितमाय[४]। सत्यवाक्तमाय। पुण्येन पुण्यतमाय[५]। स्वामितया सुस्वामितमाय। अछद्मकतमाय। वांछानंदकरतमाय (किल केषांचित् तु वांछया आनंदं करोति)। क्षमाकरतमाय। प्रतिपालकतमाय दुर्बलानाम्। हिततमाय पुण्यस्य गुरोः॥ स्त्रीमैथुनानि परिपतयां[६] [परिणयतया?] कुर्वाणाय (किल येन खुअएतुओदथं कृतं अस्ति रजस्वलासमयं [ततःपश्चात् नाचिरकाले मैथुनं] च न परित्यक्तम्[७] आस्ते[176])॥

॥ ५ ॥ यदि तत् प्राप्तं अस्ति॥ नो वा तत् प्राप्तं अस्ति। समिधांचित् अथ शुष्कानां निरीक्षितानां भारकं जंघोच्चयं स्थूलं[१] गुरोर्गृहं समानयेत्॥ यदि तत् प्राप्तं अस्ति॥ नो

---

१४. Corrected from $K_1$, $K_4$ क्रीडीतु; $EMU_3$, $EMU_1$, $K_3$ क्रीडातु.

---

॥ ३ ॥ १. $H_1$, $K_1$, $EMU_3$ पशुवार्षिकयं; $K_3$, FBV पशुवार्षकीयं चास्ति; $EMU_1$ पशुवार्षिकयं चास्ति.

॥ ४ ॥ १. $H_1$, $K_1$, $K_3$, $EMU_3$ ददंत; $EMU_1$ ददंतः. २. $H_1$ आदेशवर्तिनो; $K_1$ आदेशवर्तिनं; $EMU_3$ आदेशवर्तिन. ३. $H_1$, $K_1$, $EMU_1$, $EMU_3$ स्वामिनो. ४. Corrected from $H_1$ $K_1$, $EMU_1$, $EMU_3$, FBV ज्ञानतमाय. ५. $H_1$, $K_1$ पुण्यात् पुण्यतमाय; $EMU_1$, $EMU_3$ पुण्यानपुण्यात्माय. ६. $H_1$, $K_1$, $EMU_1$, $EMU_3$ परपतया. ७. $H_1$, $K_1$, $EMU_3$ परित्यक्तामास्ते.

॥ ५ ॥ १. Corrected from $H_1$, $K_1$, FBV यंघोत्सयस्छुलं; FBV जंघोऽस्यस्थुलं.

वा तत् प्राप्तं अस्ति । समिधां च अथ शुष्कानां निरीक्षितानां भारकं आकर्णमर्यादं स्थूलं अथ कक्षप्रमाणं स्थूलं अथ हस्तयोः प्रमाणं स्थूलं गुरोर्गृहं समानयेत् ॥

॥ ६ ॥ यदि शक्तोऽस्ति ॥ नो वा यदि शक्तिः । सुस्वामितमस्य अथ राज्यं आस्वादयेत् यत् अहुरमिज्दस्य (राज्यं इति शुभं यत् इजस्नीये प्रगुणीकृतं)। [177]“सुस्वामितमात्[१] तमाय शश्वत् राज्यं अहं यत् (राज्यं इति शुभम्) अधिकं ददामि च (आत्मनः) आस्वादयामि च (अन्येषाम्)। करोमि च (किल संग्रहं करोमि)। यस्मै अहुर्मिज्दाय धर्मश्च अतःपरः[२] (तस्मात् सुस्वामितमात्)”॥

दत्तः स्यात् अनेन मिअज्दो गुरुतया (किल गहंबारः इजितो[३] भवति शुद्धतया)॥

॥ ७ ॥ “पंचचत्वारिंशद्भिः[१] मइदिओइजरमस्य[२] [178]” अर्दिग्वहेस्तमासीयदयेपमिहिररोजस्य[178a–179] (किल पंचचत्वारिंशद्भिः दिवसैः अहं अहुरमज्दः समं अमिशास्पितैः प्रकृष्टं घटितवान्। यत् प्रथमं आकाशं अददाम्[३] मइदिओइजरमसमय इति नाम निर्मितं अर्दग्वहेस्तमासे दएपमिहिररोजे। खुररोजे[180] समयं गृह्णाति दएपमिहिररोजे संपूर्णो भवति। अस्य मइदिओइजरमताच इयं यत् मंदिरदातिः प्रकटा कृता। प्राकारो[४] मनुष्येभ्यः कृतः। अस्माभिः समं अमिशास्पितैः गहंबारः इजितः[५] मिअज्दोऽस्य[६] कृतः। मनुष्याणां च सर्वं अनया रीत्या कर्तुं योग्यम् ॥ यः कश्चित् अस्मै गहंबाराय यजते अथ ददाति अथ सजते[181] अथ आस्वादयति तस्य पुण्यं च एवं भूयात् तथा चोक्तं हादुख्तनस्के[182] प्रकटम्)।

“आदेशयेत्[७] अस्य तस्मै एतावत् प्रसादं पुरः समासन्ने भुवने

यथा एतस्मिन् भुवने यस्मिन् सृष्टिमति सहस्रं मेषीणां दुग्धमतीनां पुत्रवतीनां नराणां मुक्तात्मनां पुण्याय उत्तमाय आत्मनः प्रदद्यात्। एकस्यैव[८] संतिष्ठतां[183] वाल्लभ्ये येषां पुण्यस्य अतःपरस्य” ॥

(यः कश्चित् यो नो यजति[९] न ददाति न सजते न च आस्वादयति तस्य पापं च एवं भूयात् तथा चोक्तम्)।

“प्रथमे च नरस्य मिअज्देऽददतः[१०] स्पितम जरथुश्त्र यस्मिन् मइदिओइजरमसमयीये मिअज्दमति गुरोः अमिअज्दमतः शिष्यस्य अइजिस्नीत्वं धार्यं अंतर्मज्दईअस्नेषु” (किल इजिस्नीं[११] तस्य इअज्दाः न प्रतिकुर्वंति)। (तथा अस्य अस्मात् गहंबारात् आरभ्य यावत् अमुमेव अन्यं गहंबारं दिनं प्रति शतं अशीत्यधिकं स्तिहिराणां[184] पापश्चै[१२] [ पापस्य ] प्रवर्धयते) ॥

---

॥ ६ ॥ १. Sp. यो महाज्ञानी स्वामी. २. Sp. उत्कृष्टतरः. ३. $H_1$, $K_1$, $EMU_1$, $K_3$ एजितः.

॥ ७ ॥ १. $K_1$, $K_4$, $K_3$ पंचच चत्वारिंशद्भिः. २. $K_1$ मइदिओइजरमइश्च. ३. Corrected from $H_1$, $K_1$, FBV, $K_4$, $K_3$, $EMU_1$ अददं or आददं. ४. $H_1$, $K_1$, $K_4$ प्रकारो; $EMU_1$ प्रकरो. ५. $H_1$, $K_1$ एजितः; $K_4$, $EMU_1$, $K_3$ एजतः. ६. Thus all [ मिअज्दश्च or मिअज्दोऽस्य ]. ७. $H_1$, $K_1$, $K_4$, $K_3$ $EMU_1$ आदेशयत्. ८. FBV एकस्यैव. ९. FBV इजति. १०. $H_1$, $K_1$, $K_3$ [ऽ] ददातः; FBV नददतः; $K_4$, $EMU_1$ अदत्तुः. ११. $H_1$, $K_1$ अइजिस्नी. १२. $K_4$ पापस्ये.

॥ ८ ॥ "षष्टि मइदिओइसमस्य[185]" तीरमासीय[186] दएपमिहिर-रोजस्य[१] (किल षष्टिदिवसैः अहं अहुरमज्दः समं अमिशास्पिंतैः प्रकृष्टं घटितवान् यत् अपः अददाम्[२]। मइदिओइसमसमय इति नाम निर्मितम्। तीरमासे दएपमिहिररोजे। खुररोजे समयं गृह्णाति दएपमिहिररोजे संपूर्णो भवति। अस्य मइदिओइसमता च इयं यत् उदकं निर्मलं प्रकटीकृतम्। अस्माभिः समं अमिशास्पिंतैः गहंबार इजितैः[३]। मिअज्दोऽस्य कृतः। मनुष्याणां च सर्वं अनया रीत्या कर्तुं योग्यम्) ॥

(यः कश्चित् अस्मै गहंबाराय यजते अथ ददाति अथ सजते अथ आस्वादयति तस्य पुण्यं च एवं भूयात् तथा चोक्तं हादुख्तनस्के प्रकटम्)।

"आदेशयेत् अस्य तस्मै एतावत् प्रसादं पुरः समासन्ने भुवने।

यथा एतस्मिन् भुवने यस्मिन् सृष्टिमति सहस्रं गवां दुग्धमतीनां पुत्रवतीनां नराणां मुक्तात्मनां पुण्याय उत्तमाय आत्मनः प्रदद्यात्। एकस्यैव संतिष्ठतां वाल्लभ्ये येषां पुण्यस्य अतःपरस्य" ॥

(यः कश्चित् यो नो यजते न ददाति न सजते न च आस्वादयति तस्य पापं च एवं भूयात् तथा चोक्तम्)।

"द्वितीये च नरस्य मिअज्दे अददतः[४] स्पितम जरथुश्त्र यस्मिन् मइदिओइशिमसमयीये।

मिअज्दमति गुरोः अमिअज्दमतः शिष्यस्य अवचोगुरुत्वं धार्यं अंतर्मज्दइअस्नेषु" (किल मज्दइअस्नेषु मध्ये न अधिकारो अस्य वक्तुम्)। (तथा[५] अस्य अस्मात् गहंबाराद् आरभ्य यावत् अमुमेव अन्यं गहंबारं दिनं प्रति शतं अशीत्यधिकं स्तिहिराणां पापस्य प्रवर्धयते) ॥

॥ ९ ॥ "पंच च सप्ततिश्च पइतिशहहइअस्य[187]" सहरेवर[188] मासीयअनेरान्[189] रोजस्य (किल पंचसप्ततिभिर्दिवसैः अहं अहुरमज्दः समं अमिशास्पिंतैः प्रकृष्टं घटितवान्। यत् पृथिवीं अददां[१] पइतिशहहिमसमयः इति नाम निर्मितं। सहरेवरमासे अनेरान् रोजे। आस्तादरोजे[190] समयं गृह्णाति अनेरान् रोजे संपूर्णो भवति। अस्य पइतिशहहइअता च इयं यत् पदप्रवृत्तये सृष्टीनां पृथिवी प्रकटा कृता। अस्माभिः समं अमिशास्पिंतैः गहंबारो इजितैः[२] मिअज्दश्च कृतः। मनुष्याणां च सर्वं अनया रीत्या कर्तुं योग्यम् ॥ यः कश्चित् अस्मै गहंबाराय यजते अथ ददाति अथ सजते अथ च आस्वादयति तस्य पुण्यं च एवं भूयात् तथा चोक्तं हादुख्तनस्के प्रकटम्।

"आदेशयेत् अस्य तस्मै एतावत् प्रसादं पुरः समासन्ने भुवने यथा एतस्मिन् भुवने

---

॥ ८ ॥ १. $K_1$ दएरोजस्य. २. $H_1$, $K_1$, $K_4$, $K_3$, $EMU_1$ आददं. ३. $H_1$, $K_1$, FBV, $K_4$, $K_3$, $EMU_1$ एजितः. ४. $H_1$, FBV, $K_3$, $EMU_1$ अदात् or अदातः. ५. $H_1$, $K_1$, $K_4$, $K_3$, $EMU_1$ यथा.

॥ ९ ॥ १. Corrected from $H_1$, $K_1$, FBV, $K_3$, $K_4$, $EMU_1$ अददं. २. $H_1$, $K_1$, $K_4$,

यस्मिन् सृष्टिमति सहस्रं अश्वीनां दुग्धमतीनां पुत्रवतीनां नराणां मुक्तात्मनां पुण्याय उत्तमाय आत्मनः प्रदद्यात्। एकस्यैव संतिष्ठतां[३] वाल्लभ्ये येषां पुण्यस्य अतःपरस्य" ॥

( यः कश्चित् यो नो यजते न ददाति न सजते न च आस्वादयति तस्य पापं च एवं भूयात् तथा चोक्तम् )।

"तृतीये च नरस्य[४] मिअज्दे अदातुः[५] स्पितम जरथुश्त्र यस्मिन् पइतिशहहेसमयीये।

मिअज्दमति गुरोः अमिअज्दमतो शिष्यस्य हृदयदिव्यत्वं धार्यं अंतर्मज्दईअस्नेषु" (किल तद्वचनानां हृदयदिव्यो न[191] प्रतीतः[६])। ( तथा अस्य अस्मात् गहंबारात् आरभ्य यावत् अमुमेव अन्यं गहंबारदिनं प्रति शतं अशीत्यधिकं अस्तिहराणां[७][192] पापस्य प्रवर्धयति ) ॥

॥ १० ॥ "त्रिंशत् अइआथ्रिमस्य[193]" मिहिर[194] मासीयअनेरांरोजस्य ( किल त्रिंशद्भिर्दिवसैः अहं अहुरमज्दः समं अमिशास्पिंतैः प्रकृष्टं घटितवान्। यतः वनस्पतिं अददाम्[१]। अइआथ्रिमसमय इति नाम निर्मितम्। मिहिरमासे अनेरांरोजे। आस्तादरोजे समयं गृह्णाति अनेरांरोजे संपूर्णो भवति। अस्य अइआथ्रिमता च इयं यत् पत्रगंधरंगनीलिमादिकं वनस्पतीनां प्रकटं कृतम्। अस्माभिः समं अमिशास्पिंतैः गहंबार इजितः[२] मिअज्दश्च कृतः। मनुष्याणां च सर्वं अनया रीत्या कर्तुं योग्यम् ॥ यः कश्चित् अस्मै गहंबाराय यजते अथ ददाति अथ सजते अथ आस्वादयति तस्य पुण्यं च एवं भूयात् तथा चोक्तं हादुख्तनस्के प्रकटम् )।

"आदेशयेत् अस्य तस्मै एतावत् प्रसादं पुरः समासन्ने भुवने यथा एतस्मिन् भुवने यस्मिन् सृष्टिमति सहस्रं उष्ट्रीणां दुग्धमतीनां पुत्रवतीनां नराणां मुक्तात्मनां पुण्याय उत्तमाय आत्मनः प्रदद्यात्। एकस्यैव संतिष्ठतां वाल्लभ्ये येषां पुण्यस्य अतःपरस्य" ॥

( यः कश्चित् यो नो यजते न ददाति न सजते न च आस्वादयति तस्य पापं च एवं भूयात् तथा चोक्तम् )।

"चतुर्थे च नरात् मिअज्दस्य[३] अदात् स्पितम जरथुश्त्र यस्मिन् अइआथ्रिमे[४]-समयीये।

मिअज्दमति गुरोः अमिअज्दमतो शिष्यात्[५] प्रधानतरं चतुष्पदं विभिन्नायति अंतर्मज्दइअस्नेषु" ( किल चतुष्पदात् प्रधानतरात् असौ विभिन्नो भवति)। (तथा अस्य अस्मात् गहंबाराद् आरभ्य यावत् अमुमेव अन्यं गहंबारं दिनं प्रति शतं अशीत्यधिकं स्तेहराणां[६] पापस्य प्रवर्धयति ) ॥

॥ ११ ॥ "अशीति मइदिआरमस्य[195]"। दय[196]मासीयबेहिरामरोजस्य[197] ( किल अशीतिभिर्दिवसैः अहं अहुरमज्दः समं अमीशास्पिंतैः प्रकृष्टं घटितवान्। यत् गोपंचप्रकारं[१] अददाम्। मइदिआरिमसमय इति नाम निर्मितम्। दयमासे बेहरामरोजे। मिहिररोजे[198] समयं गृह्णाति बेहरामरोजे संपूर्णो भवति। अस्य मइदिआरिमता च इयं यत् संचयः शीतकालार्थं प्रकटीकृतः। अस्माभिः समं अमिशास्पिंतैः गहंबार इजितः[२] मिअज्दश्च

EMU$_1$ एजितः. ३. FBV, K$_3$ संतिष्ठते. ४. H$_1$, K$_1$ नःस्य; FBV नरः; K$_3$ नः. ५. K$_3$ अदात्. ६. K$_1$, K$_3$, EMU$_1$, K$_4$ प्रतीतिः. ७. H$_1$, EMU$_1$ ष्टिहिर; K$_1$ ष्तिहिर.

॥ १० ॥ १. H$_1$ *Seconda manu* त्रिं (?) पंचप्रकारान् वनस्पतीन् अददं. २. H$_1$, K$_1$ एजितः. ३. H$_1$, FBV मिअज्दे अदात्; EMU$_1$ K$_4$ मिअज्दे अदातुः. ४. H$_1$ अइथ्रिम. ५. शिष्यो. ६. K$_4$ स्तिहिराणां.

॥ ११ ॥ १. H$_1$, K$_4$, EMU$_1$ गां पंचप्रकारां. २. H$_1$, K$_1$ एजितः; EMU$_1$, K$_4$ एजत.

कृतः । मनुष्याणां च सर्वं अनया रीत्या कर्तुं योग्यम् ॥ यः कश्चित् असै गहंबाराय यजते अथ ददाति अथ सजते अथ आस्वादयति तस्य पुण्यं च एवं भूयात् तथा चोक्तं हादुख्तनस्के प्रकटम् ) ।

"आदेशयेत् अस्य तस्मै एतावत् प्रसादं पुरः समासन्ने भुवने ।

यथा एतस्मिन् भुवने यस्मिन् सृष्टिमति सहस्रं कन्यानां[199] यूथानां नराणां मुक्तात्मनां पुण्याय उत्तमाय आत्मनः प्रदद्यात् । एकस्य एव संतिष्ठतां वाल्लभ्ये येषां पुण्यस्य अतःपरस्य" ॥ ( यः कश्चित् यो नो यजते न ददाति न सजते न च आस्वादयति तस्य पापं च एवं भूयात् तथा चोक्तम् ।

"पंचमे च नरस्य मिअज्दे अदात् स्पितम जरथुश्त्र यस्मिन् मइदिआरमसमयीये ।

मिअज्दमति गुरोः अमिअज्दमतो शिष्यस्य[3] दानफलं[4] पृथिव्याः[5] विभिन्नयति अंतर्मज्दइअस्नेषु" ( किल पृथिव्याः दानफलात् असौ विभिन्नो भवति तथा अस्य अस्मात् गहंबारादारभ्य यावत् अमुमेव अन्यं गहंबारं दिनं प्रति शतं अशीत्यधिकं स्तिहिराणां पापस्य प्रवर्धयति ) ॥

॥ १२ ॥ "पंच च सप्ततिश्च[1] हमस्पथमएदमस्य" वहिस्तोइस्तोइस्गाथायाः[200] ( किल पंचसप्ततिभिर्दिवसैः अहं अहुरमज्दः समं अमिशास्पिंतैः प्रकृष्टं घटितवान् । यत् मनुष्यान्[2] दशप्रकारान् अददाम्[2] सर्वां च सृष्टिं[3][201] अददां हमस्पथमएदयसमय इति नाम निर्मितम् । अहुनूअदगाथासमयं[202] गृह्णाति वहिस्तोइस्तगाथायां संपूर्णो भवति । अस्य हमस्पथमएदएमता च इयं यत् सर्वं सैन्यदातिः प्रकटा कृता । अस्माभिः समं अमिशास्पिंतैः गहंबार एजितः मिअज्दश्च कृतः । मनुष्याणां च सर्वं अनया रीत्या कर्तुं योग्यम् ॥ यः कश्चित् अस्मै गहंबाराय यजते अथ ददाति अथ सजते अथ च आस्वादयति तस्य पुण्यं च एवं भूयात् तथा चोक्तं हादुख्तनस्के प्रकटम् ) ।

"आदेशयेत् अस्य तस्मै एतावत् प्रसादं पुरः समासन्ने भुवने

यथा एतस्मिन् भुवने यस्मिन् सृष्टिमति सर्वत्र धान्यानि मधूनि महांति उत्तमानि सुंदराणि नराणां मुक्तात्मनां पुण्याय उत्तमाय आत्मनः प्रदद्यात् । एकस्यैव संतिष्ठतां वाल्लभ्ये येषां पुण्यस्य अतःपरस्य" ॥

(यः कश्चित् यो नो यजते न ददाति न सजते न च आस्वादयति तस्य पापं च एवं भूयात् तथा चोक्तम् ) ।

"षष्ठे च नरात् मिअज्दे अदात् स्पितम जरथुश्त्र यस्मिन् हमस्पथमदएयं-समयीये

मिअज्दमति गुरोः अमिअज्दमतो शिष्यात्[4] अहुरमज्दीयात् न्यायात् असौ विभिन्नो भवति" ॥

---

३. $H_1$, $K_1$, FBV, $K_4$, $EMU_1$ शिष्यस्यात्. ४. FBV दानकलम्. ५. $H_1$, $K_1$, $EMU_1$ पृथिव्यां.

॥ १२ ॥ १. $H_1$, $K_1$, FBV, $K_3$, $K_4$, $EMU_1$ पंचाचहसतिश्च. २. Corrected from $H_1$, $K_1$, $K_3$ मनुष्यदशप्रकार अददं; FBV मनुष्यःदशप्रकारःअददं; $EMU_1$ मनुष्यदशप्रकारमददम्; $K_4$ मनुष्यं दशप्रकारं अददं. ३. $H_1$, $EMU_1$ सिन्य; $K_1$, सेन्य. ४. FBV शिष्यस्यात्.

॥१३॥ "अपापस्तं पश्चात् प्रकृष्टं आक्रोशयेत्" (किल हस्ततालिकाभिः सर्वत्र ज्ञापयेत्)। "अपापः तं पश्चात् नारस्त्रीकर्मकारिणं कुर्यात्" (किल मर्गरजानं पापिनं कुर्यात्)। "गुरुः शिष्यात् अथ शिष्याः गुरुतः" ॥

[आशीर्वादो राज्ञां पूर्वोक्तवत् इत्यादि इत्यादि]

॥ समाप्तोऽयं गहंबारआफ्रिगानाऽर्थः । शुभं भवतु ॥

---

## ॥ धूपनीरंगअविस्ताऽर्थः[203] ॥*

॥ १ ॥ मंत्रो[204] विजयिकरो भूयात् । श्रीः उत्तमा माज्दइअस्नी प्रवर्तमाना (प्रसिद्धा) भूयात् । पृथ्वीमध्ये सप्तानां द्वीपानां आनंदः (किल?) यदृच्छया अग्नेर्मध्ये[205] भवतु । स्थानकनगरे[206] विजय आनंदो लक्ष्मीः सर्वत्र भूयात् ॥..........................

॥ २ ॥ साध्यसिद्धयेऽयम्(?) आदेश रोज(?) स्वयं ईजिस्नीं[207] कृतवान् अहम् द्रूनं[207] ईजितवान् अहं मिअज्दं[207] प्रचारितवान् अहम् । इदं युगपद्[207a] भांडागारे स्रष्टुः श्रीअहुरमज्दस्य शुद्धिमतः श्रीमतः अमिशास्पितानां च संप्राप्नुयात् ॥ शक्तिः प्राणं [प्राणः] सर्वदृढत्वं उत्साहो विजयः (ऊर्जो विजयिता) अहुर्मज्दस्य स्वामिनः[208] .................. संप्राप्नुयात् ॥ अस्य अस्मदीयस्य प्रतिकृर्ता भूयात्[209] ॥ अस्माकं च रक्षाकराः शुभोत्पादकाः अन्यायविनाशानां दूरं टालका अभीष्टदायका भवंतु ॥ यथा द्वितीयमिअज्दानां[210] सहस्रपुरुषं मिअज्दं शक्नोमि साधितुम् अस्माकम् कियन्मात्रमपि समाधानतया कृतं एकं मिअज्दं अस्मदीयस्य सहस्रमिति प्रतिकृर्ता भूयात् ॥

॥ ३ ॥ अमृतात्मा आत्मीभूतः (अमुक[211]) अत्र समायात् ॥ ..................

॥ ४ ॥ सर्वेषां आत्मनां वृद्धयः (पितृभूतां) अस्मिन् कर्तव्ये[212] चतुर्थे दशमे मास्ये दिवसे वर्षदिवसे (कोऽर्थः । येषां पृथिव्यां चतुर्थं[213] दशमं मासं दिवसं वर्षदिवसं समायातं अस्ति) अस्माद् गईओमर्दपुरुषात् पूर्वं यावत् सओसिओसं पुरुषं अत्र समायांतु ॥

---

* $K_4$ in Gujerati नीरंग धूपनी लिखी.

॥ १ ॥ १. $H_1$, $K_1$ मंत्र. २. $K_4$ विजयकारी. ३. $H_1$, $K_1$, $K_3$ उत्तमांमाज्दईस्नीं. ४ $H_1$, $K_1$ $K_3$ अग्निर्मध्ये.

॥ २ ॥ १. Corrected conjecturally from $H_1$, $K_1$, $K_3$, $EMU_1$ साध्यसिध्याम्; $K_4$ साध्यसिधानां रोजस्वयं. २. $H_1$, $K_3$, $K_4$, $EMU_1$ कर्मपदम्; $K_1$ ज्ञमपदं? ३. $K_4$ शुद्धप्राण. ४. $K_1$ सर्ववृडत्वंमुच्छाहो; $EMU_1$, $K_4$ सत्वं दृढत्वं. ५. $K_1$ ऊर्या; $K_3$, $EMU_1$ ऊज्जो (i. e. उर्जस्). ६. $K_4$ प्रतिकर्ता. ७. $H_1$, $K_4$, $EMU_1$ शुभोत्पाता $K_1$ शुभोत्पादता. ८. $K_1$, $H_1$, $EMU_1$ मिज्दायां. ९. $H_1$, $K_1$ प्रचरयति. १०. $H_1$, $K_1$, $K_3$, $EMU_1$ संति. ११. $H_1$, $K_1$ ईअज्दं; $K_4$ इअस्नियं. १२. प्रतिकर्ता.

॥ ४ ॥ १. $H_1$, $K_1$, $K_3$ पितरिभूता. २. Corrected from $H_1$, $K_1$, $K_3$, $EMU_1$ मासे; $K_4$ चतुर्थदशममासदिवसवर्षदिवसीयाः. ३. $H_1$ वर्षदिवसीयो. ४. Corrected from $H_1$, $K_1$, $K_3$, समायातानां; $K_4$ समायांतु; $EMU_1$ समायात्अस्ति. ५. $H_1$, $K_1$, $K_3$, $EMU_1$ add as gloss (वृद्धयति क्रमयो वृद्धयः पितरि इत्यर्थः); $K_4$ (वृधय इति काया वृद्धयः पितर इत्यर्थः).

॥ ५ ॥ वर्तमानानां भूतानां भविष्याणां जातानां अजातानां स्वस्थानीयानां परस्थानीयानां उत्तमानां नराणां नारीणां अपत्यानां पत्यानां[214] केचित्[1] ये अस्यां पृथिव्यां आदेशमध्याः उत्तमदीनिमंतः[2] परोक्षीभूताः संति तेषां सर्वा वृद्धयो मुक्तात्मनां (पितृभूता) अस्मिन् कर्तव्ये अस्मात् गईओमर्दपुरुषात् यावत् सओशीओशं पुरुषं अत्र समायांतु[3] ॥

॥ ६ ॥ ये अस्मिन् गृहे तथा वीसि[1][215] तथा जंदे[216] तथा ग्रामे तथा देशे परोक्षीभूताः संति तेषां सर्वा[2] वृद्धयो मुक्तात्मनां ( पितृभूता[3] ) अस्मिन् कर्तव्ये अस्मात् गईओमर्दपुरुषादारभ्य यावत् सओसिओसं पुरुषं अत्र समायांतु ॥

॥ ७ ॥ मुक्तात्मनां वृद्धयः बलिष्ठानां पराक्रमवतां[1] पुराणन्यायवतां वृद्धयः नवान्वयनिकटानां च वृद्धयः वृद्धयः सर्वापि [सर्वा अपि] (पितृभूता) अस्मिन् कर्तव्ये अस्मात् गईओमर्दपुरुषादारभ्य यावत् सओसिओसं पुरुषं अत्र समायांतु[2] ॥

॥ ८ ॥ आत्मीभूतानां पितृणां [मातृणां] पितामहानां पितृमातृणां [पितृभ्रातृणां?] पुत्राणां[1] पौत्राणां[2] पुत्रीदौहितृणां कर्मकराणां नवान्वयनिकटानां च वृद्धयो मुक्तात्मनां (पितृभूता) अस्मिन् कर्तव्ये अस्मात् गईओमर्दपुरुषात् यावत् सओसिओसं पुरुषं अत्र समायांतु ॥

॥ ९ ॥ सर्वेषां आचार्याणां सर्वेषां क्षत्रियाणां सर्वेषां कुटुम्बिकानां[217] सर्वेषां प्रकृतिकर्मवतां वृद्धयो मुक्तात्मनां (पितृभूता) अस्मिन् कर्तव्ये अस्मात् गईओमर्दपुरुषात् यावत् सओसिओसं पुरुषं अत्र समायांतु ॥

॥ १० ॥ सर्वेषां मुक्तात्मनां वृद्धयः सप्तद्वीपवत्यां पृथिव्यां अर्जेहिनामद्वीपम् (पश्चिमाश्रितम्) सवहिनामद्वीपम् (पूर्वाश्रितम्) फ्रददफसूनाम द्वीपम् (दक्षिणाग्नेयकोणाश्रितम्) विददप्स नाम द्वीपम् (दक्षिणनैर्ऋत्यकोणाश्रितम्) वओरुवर्स्तिनाम द्वीपम् (उत्तरवायव्यकोणाश्रितम्) वओरुजरस्तीनाम द्वीपम् (उत्तरईशानकोणाश्रितम्) खुनरसवामी नाम द्वीपम् ( जंबूद्वीपम् ) कंदिज ( नाम[1] माडः (?) सप्तयोजनशतप्रमाणः[2] जंबूद्वीपपृथिव्या मध्ये उत्तरदिग्भागे[3] अस्ति) [वरेजमकर्द[218]] ( गंज इति निखातं मांथ्र इति वचनं अवस्तावचनानां[4] अत एवं अद्रिः[5] ?[219] गंजिमांथ्र उच्चते[6] [उच्यते] ) गंज-मांथ्र ( नाम पर्वतः[7] जंबूद्वीपे दक्षिणे क्षीर[8]समुद्रपारतटात्[9] तत्रश्च सीमा चतुर्भिर्योजनशतैः अस्ति ) एतेषां स्थानानां वृद्धयो मुक्तात्मनां (पितृभूता) अस्मिन् कर्तव्ये अस्मात् गईओमर्दपुरुषाद् आरभ्य यावत् सओसीओसं पुरुषं अत्र समायांतु ॥

---

॥ ५ ॥ १. $K_1$ केचित् तु. २. $K_1$ उत्तमदीनमंत्तः; $K_3$, $EMU_1$ आदेशमध्येउत्तमदीन्याः संतः. ३. $H_1$, $K_1$, $K_3$ add as gloss ( वर्धयति काया वृद्धय ); $K_4$, $EMU_1$ ( वृद्धय इति कायावृद्धयः ).

॥ ६ ॥ १. $H_1$ वीसे; $K_4$ वीसजंदे. २. $K_4$ सर्वे. ३. Found only in $K_4$, $EMU_1$.

॥ ७ ॥ १. $K_1$ प्राक्रमपरावतां. २. $K_4$, $EMU_1$ add ( वृद्धय इति कायावृद्धयः ).

॥ ८ ॥ १. $K_4$ पुत्रपुत्रीणां. २. पौतृणां; $K_4$, $EMU_1$ पौत्रदौहित्राणां.

॥ १० ॥ १. $H_1$ नामड्; $K_1$ नाममाड्; $K_3$ नामंड. २. $K_3$, $K_1$, $H_1$ सप्तयोजनशतं एते प्रमाणा. ३. $K_1$ उत्तरि द्विभागे; $EMU_1$, $K_4$ उत्तरदिग्विभागे. ४. $K_4$, $EMU_1$ मांथ्रा इति अविस्तावचनानि. ५. $H_1$ $K_1$, $K_3$ अत्अनिद्र; $EMU_1$ अतःअनिद. ६. $H_1$, $K_1$ उचिते. ७. $K_1$, $H_1$ प्रर्वर्त्त; $K_3$ प्रवर्ति; $EMU_1$ प्रर्वत्तः. ८. $H_1$ द्वक्षीर. ९. $K_1$ प्रतिटान्; $H_1$, $K_3$ प्रतटात्.

॥ ११ ॥ कर्मणः श्रीः संभूयात् (श्रीअहुर्मज्दस्य स्वामिनः)………… ॥ साध्यसिद्धानां रोजः स्वयं विजयकारी भूयात् ॥ …………

---

## ॥ पइतीति ॥*

॥ ० ॥ [अहुनवर ५] अमीषां सर्वेषां पापानां पश्चात्ततो अहम् । एतत् समस्तं दुर्मतं दुरुक्तं दुष्कृतं मया पृथिव्यां चिंतितम् । पुरतः युष्माकं उत्तमानाम् । मनसा वचसा कर्मणा । तन्ववस्थायां आत्मावस्थायां । पृथिव्यां परलोके च । स्वामिनि व्यावृत्य पश्चात्तापेन । त्रिप्रकारिण्या गिरा पश्चात्तप्तो अस्मि[1] ॥

(तद्[2] अयं पश्चात्तापः । स्वामिनं गुरुं अनुमत्य[3] शुद्धेन[4] मनसा सद्गुरोः पुरतः प्रायश्चित्यं कुर्यात् । पापं च सर्वं सद्गुरोः पुरतः एकांते प्रकाशयेत् । यतः त्रिभागस्य स्वयमेव प्रायश्चित्तं[5] जायते । पापं च यत् वृद्धिं कुर्वाणं[220] अस्ति तत् सर्वं निबध्यते[6] । पश्चात् शेषविभागद्वयोरपि गुरुणा उपदिष्टं प्रायश्चित्तं कुर्यात् । अन्यत्[7][221] यदि इहलोके प्रायश्चित्तं कर्तुं न शक्तं न च अवसरो जातः[8] तदा परत्रेऽपि श्रोशमिहिररश्नप्रभृतय ईज्दाः तस्यात्मनः प्रायश्चित्तं ददंति [ददति] कुर्वंति च। यथा पिता स्वपुत्रं रोगिणं जिह्लच्छेदं[9] (?)[222] औषधादिना आरोग्यं करोति। यतः स आत्मा स्वामिगुरुपक्षाश्रितः नो देवानां हस्ते चटति न च नरकं याति) ॥

(अथ[10] अहुर्मज्दीयपुण्यपक्षस्य स्तुतिं ग्रहणं च आहर्मनीयपापपक्षस्य निंदां परित्यागं च वक्षंति[11] [वक्ष्यति])

[अहुनवर ५ अशेम्वोहू ३ प्रब्रवीमि इति पूर्वोक्तवत्]

॥ १ ॥[223]

॥ १ ॥ प्रकृष्टं[1] स्तौमि समस्तानि सुमतानि सूक्तानि सुकृतानि च । मनसा वचसा कर्मणा च ॥ अपस्तौमि (इति निंदयामि) समस्तानि दुर्मतानि दुरुक्तानि दुष्कृतानि च । (अनेन[2]) मनसा वचसा कर्मणा च ॥ अधिकं ग्रहणं करोमि समस्तानां सुमतानां च

---

* $K_4$ in Gujerâti पइतीती पापप्राश्चित्यतणी व्यक्ति; $H_1$, $K_3$, $EMU_4$, $NMRL_1$ प्राश्चित्यवचनमित्यर्थः, in Gujerati ईणइ शास्त्री सविहुं पापतणां व्यक्तव्यक्तां जूजूआं प्रायश्चित्यवचन बोल्यां प्रायश्चित्य कह्यां जेणाव्यां अछइ ॥

॥ ० ॥ १. Thus far the text according to $K_1$. But $H_1$, $K_3$, $K_4$, $NMRL_1$, $EMU_1$ have सर्वेभ्यः पापेभ्यः पश्चात्तप्तो व्यावृत्तोऽहं । समस्तेभ्यो दुर्म्मतेभ्यो दुरुक्तेभ्यो दुःकृतेभ्यो यानि पापानि मया पृथिव्यां चिंतितानि* । पुरतः युष्माकं उत्तमानां । मनसा वचसा कर्मणा च । तनुना आत्मना । इहलोकतया परलोकतया च । स्वामिन् व्यावृत्तो पश्चात्तापेन । त्रिप्रकारिण्या गिरा पश्चात्तप्तोऽहं ॥

* $K_4$ adds मया उक्तानि मया कृतानि यानि मया प्राप्तानि मम मूलानि मम मूलात् संभूतानि संति तेभ्यः पापेभ्यः.

२. This commentary is not met with in the original Pahlavi Khurda-Avestâ. ३. $K_4$ अनुमन्य; $NMRL_1$ अनुमेत्य. ४. $NMRL_1$, $EMU_4$ सत्येन. ५. $H_1$ प्रायश्चित्तयं. ६. $NMRL_1$ न वर्धते. ७. $H_1$, $K_3$ अथ. ८. $K_3$ यातः; अयात्. ९. $H_1$, $K_3$, $K_4$, $EMU_4$, $NMRL_1$ डंभच्छेद (?). १०. This commentary also is not met with in the original Pahlavi Khurda Avestâ. ११. $H_1$, $K_3$, $K_4$, $EMU_4$ वक्षामि.

॥ १ ॥ १. $K_3$, $K_4$, $NMRL_1$, $EMU_4$ प्रकर्षेण. २. $H_1$, $K_1$ अने.

सूक्तानां च सुकृतानां च। मनसा वचसा कर्मणा च । किल पुण्यं करोमि ॥ परित्यागं करोमि समस्तानां दुर्मतानां दुरुक्तानां दुष्कृतानां च। (अनेन) मनसा वचसा कर्मणा च। किल पापं न करोमि॥

॥ २ ॥ प्रकृष्टं युष्मभ्यं दक्षिणां[१] [दक्षिणा] भवामि हे अमिशास्पिताः । इजिस्न्या च नमस्कृत्या च। प्रकृष्टं च मनसा प्रकृष्टं च वचसा प्रकृष्टं च कर्मणा। प्रकृष्टं[२] ऊहेन[224] (किल प्रज्ञोन्मेषेण) प्रकृष्टं च तनुना। प्रकृष्टं इदं च[३] यत् निजं जीवं [प्रकृष्टं अनेन च यत् निजेन जीवेन] ॥ तनुः जीवो नाम आत्मा अंतर्बाह्ये[४] च लक्ष्मी[ः][५] यां अस्माकं अस्ति [एतत् सर्वं] सक्तं स्वामिनः[६] धारयामि ॥ सक्तं स्वामिनो धारणं एवं भवति। यदि किंचित् इदं ईदृशं प्राप्नोति येन तनुः आत्मार्थे दातुं योग्यं (तनुं[७]) विशेषेण ददामि ॥

॥ ३ ॥ स्तौमि पुण्यं अतःपरम्। निंदयामि देवान्॥ शुभे[१] च स्रष्टुः अहुर्मज्दस्य त्रिधा-प्रहरककरो[225] भवामि (किल शुभे प्राप्ते[२] मनसा वचसा कर्मणा च त्रयेणापि प्रहरकं इति प्रतियातनम्[३] करोमि) विनाशे अन्याये अस्य गनामइनिओ (आहर्म्मनात्) उपरि संप्राप्ते आशया रिस्ताखेजस्य तेन संतोषी एकमती भवामि ॥ (रिस्तं इति शवं तस्य आखेजः इति उत्थानं स रिस्ताखेजः। किल अहुरमज्दआहर्मनयोः या समयमर्यादा अस्ति तस्याः पर्यंते आहर्मनो अक्षमो हतशक्तिः अपराज्यो भविष्यति तदानीं ये जीवंतः संति तेषां अक्षयत्वं ये च मृताः संति तेषां सर्वेषां पुनरुत्थानं भविष्यति। तच्च तनु-अक्षयं अत एव रिस्ताखेजः उच्यते) ॥ दीनिः अहुरमज्दस्य सदाचारो जरथुश्त्रस्य शुद्धं सदाचारि च कर्म पूर्वन्यायवतां गुरुं करोमि[226] [अनेन पथा पापेभ्यः पश्चात्तप्तोऽस्मि] ॥

॥ २ ॥

॥ ४ ॥ पश्चात्तप्तोऽस्मि[१] अमीषां पापानाम्। यत् मनुष्याणां मूलतः[२] शक्नोति भवितुम्। अथ वा[227] मम मूलतः[228] संभूतमस्ति। स्थूलचिह्नं अंते सूक्ष्मचिह्नं आदौ[३] अमीषां मध्ये संप्राप्तमस्ति। (इदं) त्रिगोचर्मसाटघातं[४] पापम्[५] (किल यस्य त्रिभिः गोचर्मसाटघातैः प्रायश्चित्तं भवति तावन्मात्रम्) तस्मादपि यत् निम्नतरं[६] पापं यावत्[७] सहस्रं सहस्रगुणं मर्गर्जानानाम्। एतावता अपि अधिकमस्ति। शक्नोति [वा] भवितुम्। (अथ) नामांकितानि समस्तानि दुर्मतानि दुरुक्तानि दुःकृतानि च। मत्तः केषांचित् अथ केभ्यश्चित् मर्म[८]। अथवा पापकारिता ममैव। किमपि पापं मम मूलतः संभूतमस्ति। अमीषां पापानाम्[९]। मनसा वचसा कर्मणा च। स्वामिनि[१०] व्यावृत्य[११] पश्चात्तापेन। त्रिप्रकारिण्या गिरा पश्चात्तप्तोऽस्मि। पश्चात्तप्तोऽस्मि अमीषां पापानाम्[१२] ॥

---

॥ २ ॥ १. $H_1$, $K_3$, $K_4$, $NMRL_1$, $EMU_4$ दक्षणिभवामि. २. $H_1$, $K_3$, $K_4$ प्रकृष्टेन. ३. $H_1$ $K_3$, $K_4$, $NMRL_1$, $EMU_4$ प्रकर्षेण तच्च. ४. $K_1$ अंतर्व्याह्या [मूला व्याज्या च?]. ५. $K_1$ लक्ष्मीया. ६. $H_1$, $K_1$, $K_3$, $K_4$, $NMRL_1$ स्वामिनं. ७. Corrected from $H_1$, $K_1$ तं न.

॥ ३ ॥ १. $H_1$, $K_3$, $K_4$, $NMRL_1$, $EMU_4$ शुभस्य सृष्टिस्वामिनो महाज्ञानिनः. २. $H_1$, $EMU_4$ शुभे संप्राप्ते, others शुभकर्मविषये. ३. $H_1$, $K_1$, $NMRL_1$ प्रतिःयत्तं [प्रतियातनं requital?]; $K_3$, $EMU_4$ प्रतियत्नं.

॥ ४ ॥ १. $H_1$, $K_3$, $K_4$, $NMRL_1$, $EMU_4$ पश्चात्तप्तोऽहं पापेभ्यः. २. $H_1$, $K_3$, $K_4$, $EMU_4$ $NMRL_1$ मूले. ३. $EMU_4$ अग्रे. ४. $K_3$ घातैः ५. $H_1$, $K_3$, $K_4$ पापात्. ६. $K_1$ विम्नं? ७. $K_1$ अंते. ८. $K_3$ मत्तः. ९. $H_1$, $K_3$, $K_4$, $NMRL_1$ $EMU_4$ तेभ्यः पापेभ्यः. १०. $H_1$, $K_3$, $K_4$, $NMRL_1$ $EMU_4$ स्वामिन्. ११. $H_1$, $K_3$, $NMRL_1$, $EMU_4$ व्यावृत्तो. १२. $H_1$, $K_4$, $NMRL_1$, $EMU_4$ पश्चात्तप्तोऽहं तेभ्यः पापेभ्यः.

॥ ३ ॥

॥ ५ ॥ इमानि एतावंति विनाशानां पदानि पापानां ॥ नामानि भवंति यथा ।

"हंद्रख्तम्" (किल कश्चित् कमपि अन्यायेन धारयति कार्यं वा अस्य प्रतिस्खलति तत् पापं हंद्रख्तं ज्ञेयम् । यदि द्विमुहूर्तं धारयति तन्वल) ।

"मइदीओसास्तं" मिथ्याशिक्षापणा (किल कश्चित् कस्यापि मार्गं असत्यं दर्शयति अथ [वा] सत्यं चेत् दर्शयति तमपि असत्यमनसा असदाचारतया । पश्चात् स च तेनैव पथा प्रवर्तते । तत् पापं मइदीओसस्तम्) ।

"अंदर्जफर्मानं" भलापनानिरोपः[229] (किल केनापि मृत्युकाले अथ [वा] ग्रामांतरं गच्छतापि भलापनानिरोपः प्रदत्तः । स च आदृतः अंगीकृतः । पश्चात् न कृतः । तत्पापं अंदर्जफर्मानम्) ।

"बओदीओजदं" दृष्ट्वा हतम् (किल चतुष्पदं जानन्नपि अक्षत्कार्यं अनाचारतया वेच-यंति[230] अथ [वा] वस्त्रं च एवं विदारयंति किल यस्मै कार्याय कृतं अस्ति तत्र न उप-करोति अथ [वा] खाद्यं किंचित् दुर्गंधिं विनष्टं करोति तत्पापं बओदीओजदम्) ।

"काइदिओजदं" कदर्थनया हतम् (किल स्वाधीनचतुष्पदमनुष्यादिजीवस्य आहारा-दिपालनाविषये उपेक्षां अवज्ञां च करोति तत् जीवो म्रियते तत् पापं काइदिओजदम्) ।

"आग्रिफ्तं" गृहीतम् (किल कस्याप्युपरि घातमनसा शस्त्रं गृह्णाति तत्पापं आगृफ्तम्) ।

"अऊआवरस्तं" भ्रामितम् (किल कस्याप्युपरि घातमनसा शस्त्रं भ्रामयति तत्पापं अऊआवरिस्तम्) ।

"अर्दूशं" पापम् (तत् च ईदृशं भवति किल शस्त्रं यत्तत्तया[231] शरीरे एवं दधाति यथा न पीडां करोति अथ [वा] घातं च ईदृशं करोति यस्य त्रिरात्राद् अंतराले[232] पीडा उपशाम्यति अथ [वा] छेदं[233] च [छेदश्च] अंगुलद्वयप्रमाणं भवति तदपि अर्दूशं पापं ज्ञेयम्) ।

"खुअरं"[११] पापम् (तच्च ईदृशं स्यात् किल यदि छेदं अंगुलद्वयात् ऊर्ध्वं यावत् सार्द्धं अंगुलद्वयं भवति तत् पापं खुअरपदे ज्ञेयम्) ।

"बाजाय" पापं बाहुघातः[१२] (तच्च एवं स्यात् किल यदि छेदं सार्धांगुलद्वयात्[१३] ऊर्ध्वं यावत् सत्रिभागं अंगुलत्रयं भवति तत् बाजायपदे ज्ञेयम्) ।

"ईआत" पापं पादघातम् (तच्च ईदृशं स्यात् किल यदि छेदं सत्रिभागांगुलत्रयात् ऊर्ध्वं यावत् पंचांगुलं भवति तत् ईआतपदे ज्ञेयम्) ।

"तन्वलेंगां"[१४] पापम् (तनुः अनुपकारि करोति । किल यः एतं पापं करोति तस्य तनुः

---

॥ ५ ॥ १. $H_1$, $K_1$, $K_3$, $EMU_1$, $NMRL_1$ जानतापि. २. $K_4$ व्ययति. ३. $K_4$ चणिं. ४. $K_4$ विरा यति. ५. $K_4$ कस्मै कार्याय यत् कृतमस्ति. ६. $K_4$ दुर्गन्धम्; $EMU_4$ दुर्ग्रंतं (?). ७. $K_3$ कदर्थनतया. ८. $K_4$ आनयति. ९. $H_1$, $K_3$, $K_4$, $EMU_4$ यलतया; $NMRL_1$ यलात्तयाया (?). १०. $H_1$, $K_1$, $EMU_4$, $NMRL_1$ त्रिरात्रांदंशतराले. [त्रिरात्राद् अंशांतराले]-११. $H_1$, $K_3$, $NMRL_1$ खुरहि; $K_1$ अखुरे; $K_4$ खुरि. १२. $H_1$, $K_1$, $K_3$, $K_4$, $NMRL_1$ घातं. १३. $K_4$ सार्द्धांगुलिद्वयाद् and अंगुलित्रयम्. १४. $H_1$, $K_3$ $K_4$,

अनुपकारि अपवित्रं ज्ञेयम् । तच्च ईदृशं स्यात् किल यदि छेदं पंचागुलात् ऊर्ध्वं यावत् दशांगुलं भवति तत् तन्वलपदे ज्ञेयम् । यदि शुद्धं न करोति तदा मर्गअर्जानी[१५] मृत्युयोग्यः ) । (इमानि सप्त पापानां मूलपदानि[234] । अन्यानि यानि कानिचित् पापानि तानि सर्वाण्यपि अमीषां संज्ञया[१६] निबद्धानि संति ) ।

"मर्गअर्जानं"[१७] पापम् (येन कृतेन मनुष्यो मृत्युयोग्यो भवति तत् मर्गअर्जानं पापम् । तच्च कियत् प्रकारम्[१८] । यथा । अहुरमज्दे दुष्टमानसता । राज्ञां राज्ञि दीनिंवंति[१९] दुष्टमानसता । अपान-मैथुनता । राक्षसी विद्या । आसोयी[२०][234a] यत् अवस्ताऽर्थं सम्यक् ज्ञात्वा भ्रामयंति[२१] किल यस्य त्रिभि गौचर्मसाटघातैः प्रायश्चित्तं भवति तावन्मात्रमपि पापं पुण्यस्थाने न्यस्यते[२२] पुण्यं च पापस्थाने न्यस्यते सा आसोई । तथा उत्तमदीनौ अनास्थिकता[२३] । समं प्रश्नकृतिः आसोगैः[235] त्रिरात्रम् । तथा त्रिप्रकारिण्या वाण्या दीनौ अहुरमज्दे नास्तीति ब्रूते परं वर्षावधेर्वाक् चेत् न पश्चात्तापयति । नसालेपनम्[२४] । नसापाकः[२५] । उदके अग्नौ च नसाक्षेपणम् । तथा नसानिखातीकरणम् । यदि नसा निखातोऽस्ति[२६] द्विवर्षावधेरनंतरम् । तथा भ्रातृपुत्रकलत्रादिहीनस्य स्वर्गीभूतस्य[२७][236] द्रव्यापहृतिः । परस्त्रियश्च[२८] बलाद् ग्रहणम् । स्वशरीरस्य च अग्दीनाधीनकरणम्[२९][237] त्रयाणामपि वर्षावधेरनंतरम् । तथा यः अपापस्य पुरुषस्योपरि मर्गअर्जान-साक्षि[३०] [साक्ष्यं] ददाति अथ [वा] पुरुषे अपापे मर्गअर्जानप्रतिवादी भवति तथा गुरुपुरुषस्योपरि मर्गअर्जानन्यायं अलीकं[३१] कुरुते । तथा पुरुषस्य कस्यचित् सहायतां[३२] कर्तुं योग्यं न कुरुते स च म्रियते अथ [वा] केनचित् मर्गर्जानं पापं कृतं अस्ति शुद्धिं च अभिलषते कर्तुं तन्मनोभंगी भवति । अथ शिश्नं वृषणं च अपत्यानां निर्लुंणंति अथ एतत् स्त्रीणां च समुत्पन्नति [समुत्खन्नायंति?][३३][238] । अथ कमपि अपापम् कृतापराधं निहंति । अथ कमपि कृतोग्रहानिं[३४] येन हतेन सा हानिः अपह्रियते तं न निहंति । अथ [वा] आचार्यो गुरुः आसोई कुरुते । तथा मृते भर्तरि [युवती] नारी[239] वर्षावधेर्वाक् चेत् [उचित] पतिं न कुरुते । मर्गर्जानम् ) ।

उपहास्यकरणजं पापम् । वेश्यामैथुनजं पापम् । रजस्वलामैथुनजं पापम् । अपानमैथुनजं पापं । अव्यापारमैथुनम् (कुसंयोगेन) । वीर्यविनाशम् ( स्वयंमोचनं[३५] इत्यर्थः ) ।

"रुआं" (आत्मा) तस्य स्वाधीनं यत् पापं तत् "रुआनी" उच्यते ( किल मनुष्यान्[३६] ) विना अन्यतरस्पृष्टेर्मध्ये [मैथुनं] करोति तस्य शुद्धिः आत्मना कर्तुमेव उचिता । यदि गुरोः स्वीयस्य पुरतः पश्चात्तप्तो भवति गुरुश्च सर्वेषु पदेषु त्रिभागं एवं यथा उक्तमस्ति मुंचति मोक्तुं स्वामी )[240] ।

"हमेमालः" (प्रतिवादी) तस्य स्वाधीनं यत् पापं तत् "हमेमालं" उच्यते (किल

---

$NMRL_1$ तनुवलगं. १५. $H_1$ मर्गर्जानी. १६. $K_4$ शिष्यया. [शिक्षया.] १७. $H_1$ मर्गर्जानं; $K_4$ मरगर्जानं. १८. $K_4$ तच्च किल यत्प्रकारं यथा. १९. $H_1$ राज्ञां राजि दीनिवति. २०. $H_1$, $K_4$ आसोई. २१. $K_4$ छद्मी भवति. २२. $H_1$, $K_1$, $K_4$, $NMRL_1$ न्यसते ; $EMU_4$ नश्यते. २३. $H_1$, $K_1$, $K_3$, $EMU_4$ $NMRL_1$ अनास्तिकता. २४. $K_1$ नसालोपनं. २५. नसापाकं. २६. $K_4$, $H_1$, $K_1$ $EMU_4$, $NMRL_1$ नसाई आस्ति (?). २७. $K_4$ स्वर्गीजातस्य. २८. $H_1$ परस्त्री अस्य. २९. $K_4$ अगदीनिकरणं. ३० $K_4$ मरगर्जा नसाक्षि. ३१. $K_4$ अलीकां. ३२. $K_4$ साहाय्यं. ३३. $K_4$ समुत्खनंति; $EMU_4$ समुन्यंति (?). ३४. $K_4$ उग्रहानिनं. ३५. $H_1$, $K_3$, $K_4$, $NMRL_1$, $EMU_4$ स्वयंमैथुनं. ३६. Corrected from $K_1$ मनुष्यं

नरस्य मुक्तात्मनो मध्ये पशुवधादिकं[३७] किंचित् पापं करोति सा शुद्धिः नरस्य[३८] मुक्तात्मनः स्वाधीना । यदि असौ प्रतिवादी मुंचति मोक्तुं स्वामी । तथा[३९] अस्य[४०] प्रतिवादी सर्वदा संतुष्टमानसवृत्त्या शुद्धिं मुंचति तदा अनेन शुद्धिः कृता भवति )[241] ।

पापं यत् विस्मृतिगतस्य (तच्चईदृशं किल गहंबार-इजिस्न-ईअस्ति-न्यायस्तिप्रभृतिनित्यकर्म विस्मृतं न कृतं तत् पापं "पुलशहोद[४१][242] उच्यते ) ।

वृद्ध्या वर्धयतां वृद्धिर्या पापानाम्[४२][243] ।

पापं यत् पापात् (तच्च ईदृशं किल कस्यचित् घातं करोति तेन घातेन स च कतिचिद्भिर्दिनैर्म्रियते तत् न केवलं[४३] घातात् कृतं पापं अपि तु मुक्तात्मनो वधश्च कृतो भवति । एवं अन्यदपि परिज्ञेयम् ) ।

अपरेषां च विनाशानां च पापं (किल) यत् मनुष्याणां मूलतः शक्नोति भवितुम् । निकृष्टः गनामइनिओ[244] दुर्गतिमान् प्रतिघातान् (विनाशान्) सृष्टीनां अहुरमज्दस्य प्रकृष्टं अकरोत् । होर्मिज्दः स्वामी पापानि अंतर्दीनेः प्रकटानि अकरोत् । उत्तमैः पूर्वन्या-[४४]यविद्भिः पुरुषैः पापानि विज्ञातानि संति ।

मनसा पुरतः स्रष्टुः अहुरमज्दस्य शून्यचारिणां[४५] पृथ्वीचारिणां महतः । पुरतः अमिशास्पितानाम् । पुरतः मिहिरश्रोशरश्नानाम् । पुरतः अग्निबरेस्सहओमानाम्[245] । पुरतः दीनेः आत्मनः स्वीयस्य । पुरतः सद्गुरोः दीनिवतः[४६] । पुरतस्तेषां ये उत्तमाः आगताः संति[246] ।

अमीषां पापानाम्[४७] । मनसा वचसा कर्मणा च तनुना आत्मना । इहलोकतया परलोकतया । स्वामिनि[४८] व्यावृत्त्या पश्चात्तापेन । त्रिप्रकारिण्या गिरा पश्चात्तप्तोऽस्मि ॥

॥ ४ ॥

पश्चात्तप्तोऽस्मि अमीषां पापानाम् ।

॥ ६ ॥ यत् मध्ये पितुर्मातुः भगिन्याः भ्रातुः कलत्रस्य जातकानाम् भर्तुः अधिष्ठायकस्य[247] स्वीयआसन्नगोत्रिणाम्[१][248] एकभूमीनाम्[२][249] एकधनानाम्[250] (स्वजनानाम्) एकपंक्तीनाम्[251] एकनगरिणाम्[252] आदेशकराणाम्[३] (किल सेवकमित्रजनानाम्) सार्धं[४] प्राप्तं । सर्वैः असदाचारैः[५] कथंचित् अहं [तेषां] मध्ये पापकारी संजातोऽस्मि[६] ।

अमीषां पापानाम् । मनसा वचसा कर्मणा च । स्वामिन् व्यावृत्त्या पश्चात्तापेन । त्रिप्रकारिण्या गिरा पश्चात्तप्तोऽस्मि ॥

---

and मनुष्यां in all other MSS. ३७. $H_1$, $K_4$, $K_3$ पशुवातादिकं. ३८. $K_4$ तस्य. ३९. $K_4$ परंच. ४०. $K_5$ यद्यसौ. ४१. $H_1$, $K_1$, $K_3$, $NMRL_1$, $EMU_1$ फुलशहोद. ४२. Corrected from $H_1$, $K_3$, $EMU_4$, $NMRL_1$ वृद्धावृद्धयतां । वृद्धिः या पापानां । $K_1$ विधा वर्द्धयतां वृद्धियाः पापानां । $K_4$ वृद्धावृद्धयतां &c. the Gujerâti is पाप तणी वृधि वृधारणहाररहि । ४३. $K_4$ नरकतलं. ४४. $K_3$ $K_4$ पूर्वन्यायवद्भिः. ४५. $H_1$, $K_3$, $K_4$, NMRL, अदृश्यचारिणां. ४६. $H_1$, $K_3$, $K_4$, NMRL, दीनेः आचार्यस्य. ४७. $H_1$, $K_3$, $K_4$, NMRL, तेभ्यः पापेभ्यः. ४८. $H_1$, $K_3$, $K_4$, NMRL, स्वामिन्.

॥ ६ ॥ १. $H_1$, $K_1$, NMRL, °गोत्रिणानाम्. २. $K_3$, $K_4$, NMRL, एकभूमीयानां. ३. $K_3$, $K_4$, आदेशवर्तिनां. ४. $K_1$ सार्थे. ५. $K_4$ अनाचारैः. ६. $H_1$, $K_1$, $K_3$, NMRL, संयातोऽस्यि.

॥ ५ ॥

पश्चात्तप्तोऽस्मि अमीषां पापानाम् ।

॥ ७ ॥ हिहिरनसाभक्षणम् ( हिहिर इति रक्तवीर्यपुरीषमूत्रश्लेष्मादिकम् । नसा इति [मृत]मनुष्यश्वानास्थिनखमांसकेशादिकः)[°श्वास्थि°.]। हिहिरनसालेपनम्। नसाहिहिरयोः उदके अग्नौ च क्षेपणम् । अथवा उदकस्य अग्नेः हिहिरनसासु क्षेपणम् । अविस्तानां अंचमनात् [अंचनात्?] चलने न वदनम् ( किल अंचमनात् चलन अविस्ता ये उच्चरणीयाः ते न उक्ताः[253]) । केशेषु नखेषु दंतेषु [दंत]शलाकासु । सुप्तोत्थितहस्तेषु । अपरेषु सर्वेषु केषुचित् पदेषु नसाहिहिरयोः कथंचित् अहं [तेषां] मध्ये पापकारी संजातोऽस्मि ।

अमीषां पापानां मनसा वचसा कर्मणा च । स्वामिनि व्यावृत्या पश्चात्तापेन । त्रिप्रकारिण्या गिरा पश्चात्तप्तोऽस्मि ॥

॥ ६ ॥

पश्चात्तप्तोऽस्मि अमीषां पापानाम् ।

॥ ८ ॥ किल कामः स्रष्टुः अहुरमज्दस्य अभूत् । मम योग्योऽभूत् चिंतितुं मया न चिंतितः । मम योग्यो वक्तुं मया न उक्तः । मम योग्यः कर्तुं मम न कृतः ।

अमीषां पापानाम् । मनसा वचसा कर्मणाच । स्वामिनि व्यावृत्त्या पश्चात्तापेन । त्रिप्रकारिण्या गिरा पश्चात्तप्तोऽस्मि ॥

॥ ७ ॥

पश्चात्तप्तोऽस्मि अमीषां पापानाम् ।

॥ ९ ॥ किल कामः आहर्मनस्य अभूत् । मम न योग्यः चिंतितुं मया चिंतितः । मम न योग्यो वक्तुं मया उक्तः । मम न योग्यः कर्तुं मया कृतः ।

अमीषां पापानाम् । मनसा वचसा कर्मणा । स्वामिनि व्यावृत्त्या पश्चात्तापेन । त्रिप्रकारिण्या गिरा पश्चात्तप्तोऽस्मि ॥

॥ ८ ॥

पश्चात्तप्तोऽस्मि अमीषां सर्वेषाम् [ पापानां ] ।

॥ १० ॥ सर्वप्रकारं पापम् । सर्वप्रकारं मर्गअर्जानम् । सर्वप्रकारं स्थितं (प्रायश्चित्तं करणीयं अस्ति) । सर्वप्रकारं अतीतम् । सर्वप्रकारं पापादपि पापम् । मम मध्ये अहुरमज्द-प्रतिबिंबानां मनुष्याणां मनुष्यजातीनांच संप्राप्तम् । पश्चात्तप्तोऽस्मि अमीषां सर्वेषाम् ॥

---

७. $K_3$, $K_4$ तेभ्यः पापेभ्यः.

॥ ७ ॥ १. $H_1$, $K_1$ NMRL °भक्षणां. २. $H_1$, $K_1$ NMRL °लेपनां. ३. Correctded from. $H_1$, $K_1$, $K_3$, NMRL, अंचमनात्. ४. $H_1$, $K_1$ °सिलिकासु; $K_4$ शलिकासु. ५. $K_4$ तेभ्यः पापेभ्यः. ६. NMRL, स्वामिन्.

॥ ८ ॥ १. $K_4$ तेभ्यः पापेभ्यः २. $K_3$, $K_4$ स्वामिन् व्यावृत्यो.

॥ १० ॥ १. Corrected from प्रायश्चित्यं in all. २. $K_4$ पापं यत् पापात्. ३. $K_4$ समस्तेभ्यः.

॥ ११ ॥ सर्वप्रकारं पापम्[1] । सर्वप्रकारं मर्गअर्जानम् । सर्वप्रकारं स्थितं (अस्ति)। सर्वप्रकारं अतीतम् । सर्वप्रकारं पापादपि पापम् । मम मध्ये वह्मनप्रतिबिंबानां गवां गोजातीनां च संप्राप्तम् । पश्चात्तप्तोऽस्मि अमीषां सर्वेषाम् ॥

॥ १२ ॥ सर्वप्रकारं पापम् । सर्वप्रकारं मर्गअर्जानम् । सर्वप्रकारं स्थितं (अस्ति)। सर्वप्रकारं अतीतम् । सर्वप्रकारं पापादपि पापम् । मम मध्ये अर्देग्वहिस्तप्रतिबिंबानां अग्नीनाम् अग्निजातीनां च संप्राप्तम् । पश्चात्तप्तोऽस्मि अमीषां सर्वेषाम् ॥

॥ १३ ॥ सर्वप्रकारं पापम् । सर्वप्रकारं मर्गअर्जानम् । सर्वप्रकारं स्थितं (अस्ति)। सर्वप्रकारं अतीतम् । सर्वप्रकारं पापादपि पापम् । मम मध्ये सहरेवरप्रतिबिंबानां धातूनां धातुजातीनां च संप्राप्तम् । पश्चात्तप्तोऽस्मि अमीषां सर्वेषाम् ॥

॥ १४ ॥ सर्वप्रकारं पापम् । सर्वप्रकारं मर्गअर्जानम् । सर्वप्रकारं स्थितं (अस्ति)। सर्वप्रकारं अतीतम् । सर्वप्रकारं पापादपि पापम् । मम मध्ये स्पिंदारमदप्रतिबिंबानां भूमीनां भूमिजातीनां च संप्राप्तम् । पश्चात्तप्तोऽस्मि अमीषां सर्वेषाम् ॥

॥ १५ ॥ सर्वप्रकारं पापम् । सर्वप्रकारं मर्गअर्जानम् । सर्वप्रकारं स्थितं (अस्ति)। सर्वप्रकारं अतीतम् । सर्वप्रकारं पापादपि पापम् । मम मध्ये अविर्दादप्रतिबिंबानां अपां अब्बीजानां च संप्राप्तम् । पश्चात्तप्तोऽस्मि अमीषां सर्वेषाम् ॥

॥ १६ ॥ सर्वप्रकारं पापम् । सर्वप्रकारं मर्गअर्जानम् । सर्वप्रकारं स्थितं (अस्ति)। सर्वप्रकारं अतीतम् । सर्वप्रकारं पापादपि पापम् । मम मध्ये अमिर्दादप्रतिबिंबानां वनस्पतीनां वनस्पतिजातीनां च संप्राप्तम् । पश्चात्तप्तोऽस्मि अमीषां सर्वेषाम् ॥

॥ ९ ॥

॥ १७ ॥ सर्वप्रकारं पापम् । सर्वप्रकारं मर्गअर्जानम् । सर्वप्रकारं स्थितं (अस्ति)। सर्वप्रकारं अतीतम् । सर्वप्रकारं पापादपि पापम् । मम मध्ये सृष्टीनां अहुर्मज्दस्य संप्राप्तम् । यथा ताराचंद्रसूर्याणाम् । अग्नेः दीप्यमानस्य । शुनां पक्षिणाम् । गोः पंचप्रकारायाः । अपरासां[1] च उत्तमसृष्टीनां याः अहुरमज्दस्य[2] सक्ताः । यथा मध्ये पृथ्वीआकाशयोः कथंचिद्[3] अहं मध्ये पापकारी संजातोऽस्मि ।

अमीषां पापानां[4] । मनसा वचसा कर्मणा च । तनुना आत्मना । स्वामिनि व्यावृत्त्या पश्चात्तापेन । त्रिप्रकारिण्या गिरा पश्चात्तप्तोऽस्मि ॥

॥ १० ॥

पश्चात्तप्तोऽस्मि अमीषां पापानाम् ॥

॥ १८ ॥ "स्तरस्कनिंश्नी[1]" पापम् (तच्च ईदृशं किल कोऽपि स्वर्गीभवति तस्य पाश्चात्यो[2] भ्रातृकलत्रजातकादिकः कोऽपि नहि न च प्रतिपन्नः पुत्रोऽस्ति तस्य यत् भूमिवृत्ति-

---

॥ ११-१६ ॥ १. $K_4$, NMRL, abbreviate the following सर्वप्रकारं &c. in all paragraphs by उपरि लिखितं यावत् or by पूर्ववत्.

॥ १७ ॥ १. All अपरेषां except $K_4$. २. $K_1$, $K_4$ अहुरमज्दसक्ताः. ३. $K_4$ यथा. ४. $K_4$ तेभ्यः पापेभ्यः.

॥ १८ ॥ १. $K_4$ स्तरकुरुनिकुरस्नि and स्तरकुनिश्नि. २. $K_3$ पार्श्वत्ये? NMRL, पश्चात्पान्ते? $K_4$

द्रव्यादिकं तत् "स्तर" उच्यते तेन द्रव्येण कोऽपि पुण्यात्मा[३] पुरुषः प्रतिष्ठनीयः[४] [प्रतिष्ठापनीयः]। तेन जातानां जातकानां तस्य स्वर्गीभूतपुरुषस्य नामानि प्रदातव्यानि यथा तस्य श्रेणिः पृथिव्यां प्रवर्धते। अथ तद् भूमिवृत्तिद्रव्यादिकं चेत् विनाशितं[५] तत् पापं "स्तरस्कनिश्नी" उच्यते)।

"खुअएतुओद्थ" पुण्यविनाशनम्। वंशस्य उत्तमानां विनाशनम् (किल कुत्रापि संभूयमानः उत्तमानां नरनारीणां संबंधः कपटेन टालयति)।

"गहंबारं" "महलपंक्षं"[६] "होमद्रूणम्"[254]। निश्चलं[७] पुण्यम्........ (किल यो निजान्वयक्रमे ईअज्दः आराध्यमानोऽस्ति स "निहाद" उच्यते[255])। प्रतिपन्नम् (किल कस्यचित् ईअज्दस्य इजिस्नीद्रूणादिकं प्रतिपन्नम्)। "रपिथ्विनगाह" प्रथमा[256]। दिवसं स्वर्गीभूतानाम्। यथा मम योग्यं अभूत् एजितुं[८] मया न एजितः[९]।

अमीषां पापानाम्[१०]। मनसा वचसा कर्मणाच। स्वामिनि[११] व्यावृत्त्या पश्चात्तापेन। त्रिप्रकारिण्या गिरा पश्चात्तप्तोऽस्मि॥

॥ ११ ॥

पश्चात्तप्तोऽस्मि अमीषां पापानाम्।

॥ १९ ॥ गर्वमानसता। विरुद्धमानसता[१]। अनिच्छा[२] (किल मुक्तात्मनो वृद्धिं उन्नतिं न इच्छति)। कृपणता[३]। कोपिता। ईर्ष्या। विरुद्धदृष्टिः क्षारदृष्टिः[४] दुष्टनिरीक्षणता सूक्ष्मनिरीक्षणता (किल परस्त्रीद्रव्यादिषु विरुद्धमनसा सूक्ष्मं अवलोकयति)। अप्रतिष्ठा[५]। लोभिता[६] (किल असंतुष्टता)। स्वेच्छाचारिता (न स्वामिगुरुआदेशमध्यवर्ती इत्यर्थः)। आलस्यिता। अनादरिता। भ्रमिता[७] (अव्यापारव्यसनता[८] इत्यर्थः)। भ्रांतिः (अनिश्चयता इत्यर्थः)। आस्रोई पापम् (तच्च ईदृशं किल अविस्ताऽर्थं सम्यक् ज्ञात्वा अशुभं[९] कर्म समाचरति)। असत्यसाक्षिता। असत्यन्यायता (पक्षपातेन न्यायनिर्णयकारिता इत्यर्थः)। प्रतिमास्वरूपाराधनता। "कुशादुआरिश्नी" पापम् (तच्च ईदृशं किल मुद्रां[257] छोटयन् केवलं शीवी[258] परिधानेन प्रचलति। यदि चतुर्थं क्रमं ददाति तत् तन्वलः। अतः ऊर्ध्वं यत्र कुत्रापि प्रतिस्खलति[१०] तत्रतश्चेत् प्रचलति पुनरपि चतुर्थे क्रमे तन्वलः)। नग्नचलनता (किल अइविआंघनिं[259] शीवीं विना मुक्ताकच्छश्च [मुक्तकच्छश्च] प्रचलति)। एकोपानत्प्रचलनता (किल उपानत्चलयादिकं[११][259a] एके पदि क्षिप्त्वा प्रचलति। यदि चतुर्थं क्रमं ददाति तन्वलः। अतः ऊर्ध्वं यत्र कुत्रापि प्रतिस्खलति तत्रतश्चेत् प्रचलति पुनरपि चतुर्थे क्रमे तन्वलः)। जल्पमौनता (किल बाजां[१२][260] मध्ये किंचित् व्यक्ताक्षरं प्रजल्पति)। जल्पभक्षणता (किल भक्षमाणः प्रजल्पति। स्वादे स्वादे तन्वलः)। चोरता। वर्त्मपाल-

---

पाश्चात्ये. ३. All, except $NMRL_1$ मुक्तात्मा. ४. $NMRL_1$ प्रतिष्ठियते. ५. $K_4$ विनाशयति. ६. $K_4$ मलपक्षं (?) ७. $K_1$ निश्चल्यं. ८. $K_4$ ईजितुं. ९. $K_4$ ईयितः. १०. $K_4$ तेभ्यः पापेभ्यः. ११. $H_1$ $NMRL_1$, $K_3$, $K_4$ स्वामिन्.

॥ १९ ॥ १. $K_4$, $NMRL_1$ हीनमानसता. २. $K_1$, $NMRL_1$ अनेच्छ. ३. $K_4$ लोभिता. ४. क्षरदृष्टिः विरुद्धमानसता. ५. $H_1$, $K_3$ $NMRL_1$ अप्रमिष्ठा (न प्रमाणमित्यर्थः); $K_4$ अप्रमिच्छा. ६. $H_1$ $K_3$, $K_4$ कृपणता. ७. Corrected from $K_3$ $H_1$ भ्रमता; $K_1$ भ्रामता. ८. $K_4$, $NMRL_1$ अव्यापारकामचिन्ता. ९. $H_1$, $K_3$, $K_4$ छन्नीभवति. १०. $K_4$ adds यदि चतुर्थक्रमं ददाति तन्वलः. ११.

नता[13][261] । वेश्याकर्मता । राक्षसीविद्या । राक्षसीआराधना[14] । दुश्चारिणीकर्मता[15] । दुश्चारिणीअभिगमनता । अपानमैथुनता । अपाने वीर्याधानिता[16] । "शीनं" (अश्रु) "मूयाः" (केशाः) (अश्रुपातकेशत्रोटनादिशोककारिता[262] तत्पापं शीनमूय इत्युच्यते) ।

तथा अपराण्यपि सर्वप्रकाराणि पापानि । यानि अस्यां पइतीत्यां स्मृतानि । इमानि[17] यानि न स्मृतानि । इमानि यानि ज्ञातानि । इमानि यानि न ज्ञातानि । इमानि यानि निश्चितानि । इमानि यानि न निश्चितानि । आदेशकारितया[18] पुरतः गुरोः दीनिवतः योग्यानि आसन् प्रकाशितुं मया न प्रकाशितानि ।

अमीषां[19] पापानाम् । मनसा वचसा कर्मणा च । स्वामिनि[20] व्यावृत्त्या पश्चात्तापेन । त्रिप्रकारिण्या गिरा पश्चात्तप्तोऽस्मि ॥

॥ १२ ॥

पश्चात्तप्तोऽस्मि अमीषां पापानाम् ।

॥ २० ॥ किल यदि केषांचित् "पइतिती"[1] प्रतिपन्नवान् अहं न कृतवान्[2] । अमीषां[3] आत्मनो अशुभतां[4] प्रापयत् । एतेषां जातानां[5] सर्वेषां एकैकस्य विच्छिन्नविच्छिन्नस्यार्थे । मनसा वचसा कर्मणा च । स्वामिनि[6] व्यावृत्त्या पश्चात्तापेन । त्रिप्रकारिण्या गिरा पश्चात्तप्तोऽस्मि ॥ पश्चात्तप्तोऽस्मि अमीषां पापानाम् ॥

॥ १३ ॥

॥ २१ ॥ अथ अस्या दीनेः गुरुं गृह्णामि ॥ यां (दीनिं[1]) अहुरमज्दो जरथुश्त्रस्य आस्वादयत् । जरथुश्त्रो गुस्तास्पस्य ॥ अथ अन्वयपंक्तौच[2] आदरपादि मारस्पिंदपुत्रे[3] आगच्छत् । तेन हृदयदिव्यानि कृतानि शुद्धश्च [अभवत्] ॥ पुण्यं उत्तमं आत्मवाल्लभ्याय अभिलाषितरः उत्तमतया वाञ्छये [वाञ्छे] ॥ यावत् जीवितं[4] जीवस्य । आस्तुवे सुमतं मनः[5] । आस्तुवे सूक्तं वचः । आस्तुवे सुकृतं कर्म । आस्तुवे उत्तमां दीनिं माज्दईअस्नीम् ॥

॥ २२ ॥ सर्वेषु पुण्यकर्मसु एकमतो भवामि । तेषु सर्वेषु[1] पापेषु विभिन्नमनो भवामि ॥ शुभे त्रिधा प्रहरककरो भवामि[2] (किल शुभकर्मविषये मनसा वचसा कर्मणा त्रयेणापि प्रहरकं इति प्रयत्नं[3] करोमि) । अन्यायात् संतोषं करोमि[4] (किल विनाशे अन्याये आहर्मनात्[5] [मम] उपरि संप्राप्ते संतोषं करोमि) । "पुल"[6] (इति सेतुः नरकद्वारोपरि अस्ति[7] तत्र)

---

NMRL$_1$ चल्यादिकं. १२. K$_4$, NMRL$_1$ ग्वाजां. १३. H$_1$, K$_3$, K$_4$, NMRL$_1$ गर्भपातना. १४. H$_1$, K$_3$ शाकिनी. १५. K$_4$ दुश्चारिकर्मता. १६. H$_1$ वीर्यधारयिता; K$_3$, K$_4$ वीर्यधारणता; NMRL$_1$ वीर्यधारिता. १७. K$_4$ तानि. १८. K$_1$ °काशिताजा?; K$_4$ °कारितायाः; K$_3$ °कारिताजाः. १९. K$_4$ तेभ्यः पापेभ्यः. २०. H$_1$, K$_3$, K$_4$ स्वामिन्.

॥ २० ॥ १. H$_1$, K$_3$ पइतीती. २. H$_1$, K$_1$ कृतकृतवान्. ३. H$_1$ तेषाम्. ४. H$_1$ दुष्टनिग्रहं प्राप्नोति. ५. K$_3$ यातानां. ६. K$_3$, K$_4$ स्वामिन् व्यावृत्यो.

॥ २१ ॥ १. H$_1$ या दीनि. २. K$_1$ °पंक्तिः. ३. K$_4$ आदरपादश्च मारस्पिंदो. ४. H$_1$, K$_3$, जीवने; K$_4$ जीवितव्येन. ५. H$_1$, K$_3$, K$_4$ निश्चयीभवामि सुमतेन मनसा निश्चयीभवामि सूक्तेन वचसा निश्चयीभवामि सुकृतेन कर्म्मणा निश्चयीभवामि उत्तम दीनौ माज्दईअस्न्यां.

॥ २२ ॥ १. K$_4$ तेभ्यः पापेभ्यः. २. K$_4$ शुभस्य त्रिधाप्रहरकं करोमि. ३. H$_1$, K$_1$ प्रयत्तं. ४. K$_1$ आस्मिन् अन्याये सहर्षो भवामि. ५. K$_1$ अस्य गनामइनिओ. ६. H$_1$, K$_1$ पुहलः K$_1$ फुल. ७.

